गन्धर्वराजावपि तत्रैवाजग्मतुः । आगतयोश्च तयोर्लज्जितात्मजोपगमुदितहृदययोर्जामातृदर्शनसमुत्फुल्लवदनयोस्तारापीडशुकनासाभ्यां सहानुभूतसंबन्धकोचितसंवादकथयोः सहस्रगुण इव महोत्सवः प्रावर्वत ।

अथ प्रवर्तमान एव तस्मिंश्चित्ररथस्तारापीडमवादीत् । विद्यमाने 5 स्वभवने किमर्थमयमरण्ये महोत्सवः क्रियते । अपि च यद्यप्यस्माकमयमेव परस्पराभिरुचिनिष्पन्नो धर्म्यो विवाहस्तथापि लोकसंव्यवहारोनुवर्तनीय एव । तद्गम्यतां तावदस्मदीयमवस्थानम् । ततः स्वभूमिं चन्द्रलोकं वा गमिष्यथ । तारापीडस्तु तं प्रत्यवादीत् । गन्धर्वराज यत्रैव निरतिशयं संपत्सुखं तदेव वनमपि भवनम् । तदी- 10 दृशं क्वापरत्र मया संपत्सुखं प्राप्तम् । अन्यच्च संप्रति सर्वगृहाण्येव मया जामातरि ते संक्रामितानि । तद्वयस्य वधूसमेतं तमेवादाय गम्यतां गृहसुखानुभवनायेति । चित्ररथस्तु तथाभिहितो राजर्षे यथा ते रोचत इत्युक्त्वा चन्द्रापीडमादाय हेमकूटमगात् ।गत्वा च चित्ररथः कादम्बर्या सह समयमेव स्वं राज्यं चन्द्रापीडाय न्यवेदयत् । 15 पुण्डरीकायापि समं महाश्वेतया निजपदं हंसः । तौ तु हृदयरुचितवधूलम्भमात्रकेणैव कृतार्थौ न किंचिदप्यपरं प्रत्यपद्येताम् ।

अन्यदा जन्माभिवाञ्छितहृदयवल्लभलाभमुदिता सर्वस्वजनमध्योपगमननिर्वृतापि, कादम्बरी बाष्पोत्तरललोचना विषण्णमुखी वासभवनगतं चन्द्रापीडमूर्तिं चन्द्रमसमप्राक्षीत् । आर्यपुत्र सर्वे खलु वयं मृताः 20 सन्तः प्रत्युज्जीविताः परस्परं संघटिताश्च । सा पुनर्वराकी पत्रलेखास्माकं मध्ये न दृश्यते । न विद्मः किं तस्याः केवलाया वृत्तमिति । चन्द्रापीडमूर्तिश्चन्द्रमास्तच्छ्रुत्वा प्रीतान्तरात्मा तां प्रत्यवादीत् । प्रिये

कुतोऽत्र । सा हि खलु मद्दुःखदुःखिनी रोहिणी शप्तं मामुपश्रुत्य कथं त्वमेकाकी मर्त्यलोकनिवासदुःखमनुभवसीत्यभिधाय निवार्यमाणापि मया प्रथमतरमेव मच्चरणपरिचर्यायै मर्त्यलोके जन्माग्रहीत् । इतश्च जन्मान्तरं गच्छता मया मदुपरमसमुन्मुक्तशरीरा पुनरपि मर्त्यलोकमवतरन्ती बलादावर्ज्यात्मलोकं विसर्जिता । तत्र पुनस्तां द्रक्ष्यसीति । कादम्बरी तु तच्छ्रुत्वा रोहिण्यास्तयोदारतया स्नेहलतया महानुभावतया पतिव्रततया पेशलतया च विस्मितहृदया परं लज्जिता न किंचिदपि वक्तुं शशाक ।

अत्रान्तरे जन्मद्वयाकाङ्क्षितं कालप्रभोश्चन्द्रमसः कादम्बरीसंभोगसुखमिवोपपादयितुमपससार वासरः । अनुरागपताकेवोल्लसदपरसंध्यावधूत्रपावरणायेव वितस्तार वासतेयी । चन्द्रोदयाभिरामं च समग्रमेव जगदभवत् । एवं च भरेणावतीर्णायां रजन्यां चन्द्रापीडश्चिराभिलषितमुन्मीलितनयनकुवलयमुत्स्रस्तनीवीप्रसृतकरनिवारणानुबन्धमनुभूतप्रत्यालिङ्गनसुखमभिप्रार्थितसुरतपरिसमाप्तित्रपासुभगं कादम्बरीप्रथमसुरतसुखमनुभूयैकदिवसमिव दशरात्रं स्थित्वा परितुष्टहृदयाभ्यां श्वशुराभ्यां विसर्जितः पितुः पादमूलमाजगाम ।

आगत्य च समकालमेवानुभूतक्लेशं राजलोकमात्मसमं कृत्वा समारोपितराज्यभारः पुण्डरीके परित्यक्तसर्वस्वकार्ययोः पित्रोः पादावनुचरन्कदाचिदत्यद्भुतोत्फुल्लनयननैगमजनावलोकितो जन्मभूमिस्नेहादुज्जयिन्यां कदाचिद्गन्धर्वराजगौरवेणानुपमरमणीयतममहिम्नि हेमकूटे कदाचिदमृतपरिमलाधिवाससुरभिशिशिरसर्वप्रदेशहारिणि रोहिणीबहुमानेन चन्द्रलोके कदाचिदहर्निशोत्फुल्लसहस्रपत्त्रनिवहोदकवाहिनि पुण्डरीकप्रीत्या लक्ष्मीनिवाससरसि कादम्बरीरुच्या च सर्व-

त्रैवापरेष्वपि रम्यतरेषु तेषु तेषु स्थानेषु तया सह जन्मद्वयाकाङ्क्षितैवाप-
रिसमाप्तान्यपुनरुक्तानि च तानि तानि न केवलं चन्द्रमाः कादम्बर्या
सह कादम्बरी महाश्वेतया सह महाश्वेता तु पुण्डरीकेण सह पुण्डरी-
कोऽपि चन्द्रमसा सह परस्परावियोगेन सर्व एव सर्वकालं सुखान्य-
नुभवन्तः परां कोटिमानन्दस्याध्यगच्छन् ।





